

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:9, Issue: 7
October-2022, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

अक्टोबर् २०२२
रू. २०/-

०१-१०-२०२२
मन्दवासरः
रात्रौ - गरुडवाहनम्

कलियुग प्रत्यक्ष देवः श्री वेङ्कटेश्वर स्वामी विराजमान तिरुमल देवालये स्वामिनः अनुदिनम् आयोजमान सेवान् नमूना आलये २०२२, आगस्ट् १६ तः २० तारीखायां पर्यन्तं सर्वे भक्ताः वीक्षितुं यस्.पि.यस्.आर्. नेल्लुरुमण्डले ए.सि.सुब्बरेड्डि कलाक्षेत्रे आयोजित श्रीवेङ्कटेश्वर वैभवोत्सवदृश्यानि। अस्मिन् कार्यक्रमे राज्यसभासदस्याः श्री वेमिरेड्डि प्रभाकर रेड्डि, नव देहली स्थानिक सलहामण्डलि अध्यक्षाः श्रीमति वेमिरेड्डि प्रशान्ती रेड्डि, ति.ति.दे. पालकमण्डलि अध्यक्ष वर्याः श्री वै.वी.सुब्बारेड्डि दम्पत्यौ, ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम् ऐ.ए.एस्.इत्यादयाः भागं गृहीतवन्त।




















# गीतामृतम्



अहो बत महत्तपम कर्तुं व्यवसिता वयम्।
यद्राज्यसुखलोभेन हंतुम् स्वजनमुद्यताः।। (भगवद्गीता ४४-१)

हन्त! राज्यसुखस्य लोभेन स्वजनान् एव मारयितुम् उद्युक्ताः वयं महदेव पापं कर्तुं प्रवृत्ताः स्मः।



# सङ्कीर्तनम्

श्री वेङ्कटशं - रागः - कल्याणवसन्त - आदि ताला।

प।। श्री वेङ्कटशं भजामि सततं श्रितजन परिपालं गानलोलम्
अनुप।। श्री भूमिजा रमणं भव तरणं नाम तीर्थ रूपं भू-वैकुण्ठपतिम्
च।। चन्द्र पुष्करिणी तीर विहारं इन्द्रादि देव पाद पूजितम्
श्री भूदेवी श्रित नित्य कल्याणवसन्तोत्सव प्रियकरणम् (मध्यमकाल)
शङ्ख चक्र धरं शङ्ख नाद प्रियकरं गोविन्दम्
विदि गुरुगुहादि पूजितात्म पदं कलियुग प्रसन्नम्

(अन्नमाचार्यसङ्कीर्तनम्)



# दीपावाळि वैशिष्ट्यम्




हिन्दूनां पर्वदिनेषु दीपावाळिः प्रत्येकः। अधर्मोपरि धर्मस्य विजय चिह्नया दीपावळिम् आयोजयन्ति इति पुराणवचनम्। आश्वयुज अमावास्य दिने दीपावाळि पर्वदिनम् आयोजयन्ति। गृहेषु नूतन कान्तिम् आनयति एषः पर्वदिनः।

पर्वदिन वैशिष्ट्यं किम्? पौराणिक चरित्रा अस्ति वा? इत्यादि प्रश्नान् समाधानानि अधुना ज्ञास्यामः। पुराण कथनानुसारं भूदेवीवराहस्वामिनोः असुरसमये जातः नरकासुरः। श्रीहरेः हस्ते मरणं न भवितव्यं मातुः हस्ते एव मरणम् आगन्तव्यम् इति वरं प्राप्नोति। वरगर्वेण लोककण्टक इव सर्वान् देवान्, मुनीन्, गन्धर्वान् पीडयति स्म। सर्वे श्रीहरेः सकाशं गत्वा तेषाम् अवस्थां विदितवन्तः। तेषां बाधां श्रुत्वा श्री महाविष्णुः द्वापरयुगे श्रीकृष्णावतारेण सत्यभामया सह नरकासुरं मारितवान्। नरकासुर संहारेण सर्वे आनन्देन उत्सवं कृतवन्तः। चतुर्दशि दिने नरकासुरः मरणं जातम्। अपरे दिने दीपान् प्रज्वाल्य सर्वे उत्सवान् कृतवन्तः। तथा आगतम् एतत् पर्वदिनम्।

दीपावळिः नाम दीपानाम् आवळिः इति अर्थः। दीपावळिं पञ्चदिन पर्वदिन रुपेण अपि आयोजयन्ति। आश्वयुज बहुल त्रयोदशी तः कार्तिक शुक्ल विदिय ''भगिनी हस्त भोजन'' पर्यन्तम् आयोजयन्ति। आश्वयुज बहुल त्रयोदशिं ''धनत्रयोदशिः'' इति वदन्ति। गृहं शुभ्रं कृत्वा पुरातन वस्तून् शुभ्रं कुर्वन्ति। नूतन सुवर्ण, रजत (वस्तूनि) आभरणानि अस्मिन् दिने पूजायां स्थापयति चेत् धनलक्ष्मी देवता अष्टैश्वर्यान् ददाति इति भक्तानां विश्वासः। तदर्थमेव अस्मिन् दिने धनलक्ष्मी, कुबेरं भक्तिश्रद्धाभ्यां पूजनं कुर्वन्ति। धनत्रयोदशि दिने नकेवलं सुवर्णरजतौ अपिच अनेकविध वस्तूनां क्रयणं कुर्मः चेत् अपि शुभमेव भवति इति विश्वासः। क्षीरसागरमथन समये लक्ष्मी देव्याः आविर्भावः अस्मिन् त्रयोदशि दिने एव इति पुराणानि वदन्ति। तदर्थमेव अस्मिन् दिने लक्ष्मीदेव्याः पूजनं ये कुर्वन्ति ते तस्याः अनुग्रहं प्राप्नुवन्ति। गृहे अगतं यत् किमपि वा भवतु तत् अमृतभाण्डं इव विराजते।

अस्मिन् दिने औषधाधिपतिः धन्वन्तरी महर्षेः जयन्तिरपि। सः अपि क्षीरसागरमथने एव आविर्भूतः। एकस्मिन् हस्ते अमृतकलशम् अपरस्मिन् हस्ते आयुर्वेद ग्रन्थं धृत्वा आगतः। धन्वन्तरी अपि श्रीमन्नारायणस्य अंशः एव। आश्वयुज बहुल अमावास्यां दीपावळि पर्वदिनम् आयोजयन्ति। रात्रौ इदं पर्वदिनम् आयोजयन्ति जनाः। तेलुगुसंस्कृतौ ''दिब्बि दिब्बि दीपावळि, मळ्ळी वच्चे नागुल चविति , पुट्ट मीद जोन्नकर्र पुटुक्कु देब्ब!'' इति गीतं गात्वा अग्नेः सम्मुखे स्थित्वा आनन्देन आयोजयन्ति। अनन्तरं गृहं दीपैः अलङ्कुर्वन्ति। मृत्तिका प्रमिदयां दीपं प्रज्वालयन्ति।

दीपावळिः पर्वदिनानन्तरं 'बलिपाड्यमि' नाम्ना पर्वदिनम् आयोजयन्ति। चतुर्दश्यां तिथौ विष्णुमूर्तिः बलिचक्रवर्ति पाताळस्य प्रेषणानन्तरम् अस्मिन् दिने पुनः तस्य भूमण्डलस्य आगमनं जातम् इति कारणेन इदं पर्वदिनम् आयोजयन्ति। महाराष्ट्रवासिनः इमं दिवसं 'नवदिवस्' नाम्ना आयोजयन्ति। गुजराष्ट्रीयानां ''युगादिः'' अद्य एव।

तदन्तरं भगिनी हस्तभोजनम् नाम्ना पर्वदिनम् आयोजयन्ति। सोदराः अस्मिन् दिने सोदर्यः हस्तात् भोजनं कुर्वन्ति चेत् अपमृत्युभयान् (दोषान्) गच्छन्ति इति विश्वासः।

एतादृश पद्धत्या पञ्चदिनानि दीपावळिपर्वदिनम् आयोजयन्ति चेत् लक्ष्याः अनुगृहं सर्वे प्राप्नुवन्ति इति ज्येष्टानाम् उक्तिः।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*




तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका
आध्यत्मिकसचित्रमासपत्रिका

# अक्टोबर् २०२२

सम्पुटिः-०९ सञ्चिका-०७

श्रीशुभकृत्संवत्सरस्य आश्वयुजशुक्लसप्तमी तः
श्रीशुभकृत्संवत्सरस्य आश्वयुजकृष्णसप्तमीपर्यन्तम् - १९४४



| | |
|---|---|
| दुर्गा दुर्गतिनासिनी<br>- डा॥ एम्.जि.नन्दनभट्टः | 06 |
| परादेव्याः माहत्म्यम्<br>- जि.विद्यावती | 08 |
| नवरात्रिः<br>- डा. वै.नागेन्द्रम्मा | 09 |
| हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः<br>- डा॥ गङ्गिशेट्टि लक्ष्मीनारायणः | 15 |
| भगवद्गीता<br>- श्री आर्.अनन्तकृष्णशर्मा | 16 |
| बकस्य प्रतीकारः | 18 |
| आगतवान् फल्गुणः<br>- श्री ए.वि.किरणः | 19 |
| बालविनोदिनी | 21 |



गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.), ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.

मुखचित्रम् – गरूडवाहनम्, तिरुमल।
अन्तिमरक्षापुटः – चक्रस्नानम्, तिरुमल।



**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-



# दुर्गा दुर्गतिनाशिनी

- डा.एम्.जि.नन्दनभट्टः, चरवाणी - ८५००५६३०७४

सर्वदा सुखं सर्वदा कष्टम् इति मानवानां जीवने न भवतीति ज्येष्ठाः वदन्ति। ''चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः'' इति आर्योक्तिः। सुखे सर्वे आनन्दमनु भवन्ति। किन्तु दुःखकालः दुःसहो भवति। एतादृशे प्रतिकूलकाले अस्माकं सहायकाः केऽपि भवेयुः एव। किन्तु अनुकूल काले यथा जनाः सन्निहिताः भवन्ति तथा प्रतिकूल काले केऽपि न भवन्ति। जलसमृद्धे जलाशये यथा जलचराः जलाशयं प्रविशन्ति तथा समृद्धिकाले सर्वे आश्रयं प्राप्नुवन्ति। प्रतिकूल स्थितौ ते एव पराङ्मुखा भवन्तीति लोकव्यवहारः। एतादृशसन्दर्भे अस्माकं सहाय्ये जगन्मातरं विना के वा सहायमाचरन्ति। दुर्गात् कष्टात् अस्मान् तारयति सा एव दुर्गा। दुर्गास्वरूपिण्याः जगन्मातुः पूजनस्य फलं देवीभागवते वर्णितम्। यथा -

दुःखदारिद्र्यनाशाय सङ्ग्रामे विजयाय च।
क्रूरशत्रुविनाशार्थं तथोग्रकर्मसाधने।।
दुर्गाञ्च पूजयेद्भक्त्या परलोकसुखाय च।

इति। अस्याः देव्याः पूजनम् आश्विजमासे विशेषतया कुर्वन्ति। देव्याः नवरात्रपूजनं लोके प्रसिद्धम्। अस्याः देव्याः प्रभावः देवेभ्यः अपि अगम्यः। देवक्याः अष्टमे गर्भे लोकरक्षकः महाविष्णुः आविर्भूतः। तस्मिन्नेव समये राक्षसमोहनाय इयं देवी गोकुले नन्दगेहे जन्म प्राप्तवती। तस्याः वैभवं श्रीकृष्णः स्वयं नन्दाय कदाचित् वर्णयति। यथा -

आद्या नारायणीशक्तिः सृष्टिस्थित्यन्तकारिणी।
करोमि च यथा सृष्टिं यथा ब्रह्मादिदेवताः।।
यया जयति विश्वञ्च यथा सृष्टिः प्रजायते।
यया विना जगन्नास्ति मया दत्ता शिवाय सा।।

दया निद्रा च क्षुत्तृप्तिः तृष्णा श्रद्धा क्षमा धृतिः।
तुष्टिः पुष्टिः तथा शान्तिः लज्जाधिदेवता हि सा।।
वैकुण्टे सा महासाध्वी गोलोके राधिका सती।
मर्त्ये लक्ष्मीश्च क्षीरोदे दक्षकन्या सती च सा।।
सा दुर्गा मेनका कन्या दैत्यदुर्गतिनासिनी।
स्वर्गलक्ष्मीश्च दुर्गा सा शक्रादीनां गृहे गृहे।।
सावाणी सा च सावित्री विप्राधिष्ठातृदेवता।
वह्नौ सा दाहिका शक्तिः प्रभाशक्तिश्च भास्करे।।
शोभाशक्तिः पूर्णचन्द्रे जले शक्तिश्च शीतला।
सस्यप्रसूतिशक्तिश्च धारणा च धरासु सा।।
ब्राह्मण्यशक्तिर्विप्रेषु देवशक्तिः सुरेषु सा।
मद्भक्तानां भक्तिशक्तिः मयि भक्तिप्रदा सदा।।
नृपाणां राज्यलक्ष्मीश्च वणिजां लभ्यरूपिणी।
पारे संसारसिन्धूनां त्रयी दुस्तरतारिणी।।
व्याख्याशक्तिः श्रुतौ शास्त्रे दातशक्तिश्च दातृषु।
क्षत्रदीनां विप्रभक्तिः, पतिभक्तिः सतीषु च।
एवं रूपा च या शक्तिः मया दत्ता शिवाय सा।।

एवं प्रकारेण दुर्गायाः विराट्स्वरूपं परमात्मना उक्तम्। श्रीमन्महाभारते कपटद्यूत पराजिताः पाण्डवाः द्वादशवर्षाणाम् अरण्यवासं समाप्य एकवर्षस्य अज्ञातवासार्थं विराटनगरं चितवन्तः। कौरवेभ्यः सुरक्षिताः भवितुं दैवसाहाय्यम् अतीव अपेक्षितम् इति धर्मराजः अचिन्तयत्। तदा दुर्गादेव्याः स्तुतिरेव प्रशस्ता इति मत्वा ताम् अस्तुवत्।

विराटनगरं रम्यं गच्छमानो युधिष्ठिरः।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम्।।
यशोदागर्भसंभूतां नारायणवरप्रियाम्।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धिनीम्।

देव्याः स्मरणस्य फलमपि स्पष्टतया तत्र उक्तम्।

पापपङ्के निमग्नाः अपि देव्या उधृता भवन्ति।
भारावतरणे पुण्ये ये स्मरन्ति सदाशिवाम्।
तान् वै तारयसे पापात् पङ्के गामिव दुर्बलाम्।।

धर्मराजः भ्रातभिस्सहितः देव्याः दर्शनकांक्षया एव स्तोत्रमकरोदिति स्पष्टम्। (श्लो.विराज६.६) सङ्कल्पः दृढः स्यात् पर्याप्तप्रयत्वश्च स्यात् तदा माफल्पमाप्नोति इति आर्यवचनम्। युधिष्ठिरस्य दृढप्रयत्नस्य कारणतः स्तोत्रान्ते देवी प्रत्यक्षा अभवत्। देव्याः दर्शनेन पाण्डवाः कृतार्थाः अभवन्। विराटनगरे स्थितान् युष्मान् कौरवाः न अभिज्ञास्यन्ति इति वरमपि ते प्राप्तवन्तः। देव्याः एतस्य स्तोत्रस्य पठनेन जनाः सर्वेऽपि सौख्यं प्राप्नुवन्ति इति देव्या अभिवचनं दत्तम्।

ये च सङ्कीर्तयिष्यन्ति लोके विगतकल्मपाः।
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम्।।
प्रवासे नगरे चापि सङ्ग्मे शत्रुसङ्कटे।
अटव्यां दुर्गकान्तारे सागरे गहने गिरौ।।
ये स्मरिष्यन्ति मां राजन् यथाहं भवता स्मृता।
न तेषां दुर्लभं किञ्चित् अस्मिंल्लोके भविष्यति।।
इदं स्तोत्रवरं भक्त्या शृणुयाद् वा पठेत वा।
तस्य सर्वाणि कार्याणि सिद्धिं यास्यान्ति पाण्डवाः।।

एतादृशं स्तोत्ररत्नं पठित्वा सर्वे सुखमवाप्नुयुः इति आशास्महे।



### आगस्ट् लघुप्रश्नोत्तरी समाधानानि

१. श्रावण, २. राघवेन्द्रतीर्थाः, ३. दशमस्कन्धस्य, ४. तमिलनाडु, ५. ७, ६. गुरुबलादि, ७. १६, ८. १५, ९. ६, १०. कठोपनिषदि, ११. वेदं, १२. कूर्म वराहावतारयोः, १३. २०, १४. स्वास्थ्यरक्षणम्, रोगोपशमनम्, १५. संविचिन्त्य व्ययीकरणेन

# पराद्देव्याः
## माहत्म्यम्

- जि.विद्यावती
चरवाणी - ८६८६१३१८३३



अस्माकं भारतवर्षे प्रतिवर्षं बहूनि पर्वाणिमन्यन्ते। तेषु पर्वेषु दीपावाळिः हिन्दूनां पवित्रं पर्वमस्ति। इदं कथ्यते यत् अस्मिन् एव दिने श्रीरामः रावणादि राक्षसान् निहत्य सीतया लक्ष्मणेन च सह चतुर्दशवर्षाणां वनवासं समाप्य अयोध्यां प्रत्यागच्छन्। तदा अयोध्यावासिनः प्रसन्नो भूत्वा स्वहिप राजमार्गेषु च दीपकान् प्रज्वालयन्। जानाः श्रुत्यानुसारेण अस्मिन् एव दिने समुद्रमथने लक्ष्मी प्रकटिता अभवत्।

भारतवर्षस्य एकः महान् उत्सवः अस्ति। दीपावळिः इत्युक्ते दीपानाम् आवळिः। अयम् उत्सवः कार्तिकमासास्य अमावस्यायां भवति। कार्तिकमासस्य कृष्णपक्षस्य त्रयोदशीतः आरभ्य कार्तिकशुद्धिविदीया पर्यन्तं ५ दिनानि यावत् आर्चयते एतत् पर्वम्। सायंकाले सर्वे जनाः दीपानां मालाः प्रज्वालयन्ति। दीपानां प्रकाशः अन्धकारम् अपनयति। एतत्पर्वावसरे गृहे, देवालये, आश्रमे, मठे, नदीतीरे, समुद्रतीरे एवं सर्वत्रापि दीपान् ज्वालयन्ति। प्रतिगृहं पुरतः आकाशदीपः प्रज्वाल्यते। दीपानां प्रकाशेन सह स्फोटकानाम् अपि प्रकाशः भवति। पुरुषाः, स्त्रियः, बालकाः, बालिकाः च नूतनानि वस्त्राणि धारयन्ति आपणानां च शोभां द्रष्टुं गच्छन्ति। रात्रौ जनाः लक्ष्मीं पूजयन्ति मिष्टन्नानि च भक्षयन्ति। सर्वे जनाः स्वगृहाणि स्वच्छानि कुर्वन्ति, सुधया लिम्पन्ति सुन्दरैः च चित्रैः भूषयन्ति। ते स्वमित्रेभ्यः बन्धुभ्यः च मिष्टान्नानि प्रेषयन्ति। बालकाः बालिकाः च क्रीडनकानां, मिष्टन्नानां, स्फोटकपदार्थानां च क्रयणं कुर्वन्ति। अस्मिन् दिवसे सर्वेषु विद्यालयेषु कार्यालयेषु च अवकाशः भवति भारतीयाः इमम् उत्सवम् प्रतिवर्षं सोल्लासं समायोजयन्ति। एवं सर्वरीत्या अपि एतत् पर्व दीपमयं भवति। अस्य पर्वणः दीपालिका, दीपोत्सवः सुखरात्रिः, सुखसुप्तिका, यक्षरात्रिः, कौमुदीमहोत्सवः इत्यादीनि नामानि अपि सन्ति। अस्मिन्नवसरे न केवलं देवेभ्यः अपि तु मनुष्येभ्यः प्राणिभ्यः अपि दीपारतिं कुर्वन्ति।





# नवरात्रिः

- डा.वै.नागेन्द्रम्मा
चरवाणी - ८९१९५३८०४०

श्रीचक्रसिंहासिन्याः देव्याः आराधनं देशे सर्वत्र नवरात्रिषु सध्दया कुर्वन्ति जनास्सर्वे। प्रदानताय शक्तेः उपासना अत्र विशिष्टा। नवरात्रयः इत्यत्र 'नव' इति संख्या पूर्णत्वं घोतयार्त। गणपतेः देव्याः च पूजां नवरात्रेषु कुर्वन्ति। वसन्तनवरात्रयः शरन्नवरात्रयः इति द्विवारं नवरात्रीणां उत्सवं कुर्वन्ति। संवत्सरम् आश्वियुजमासः तत्र शरद्दतुः प्रथमत्र्तुः। तस्मित् समयं यमदष्ट्रिकाः कांश्चनमासान् तिष्ठन्ति। अतः अकालमरण, आधिव्याधि निवारणाय कालगप्यागतान् दुष्कलितान् निवारयितुं देव्याराधनं करणीयम्। एवं दिव्यशक्तेः आराधनमत्र वैशिष्टयं प्राप्नोति।

सौरमानप्रकारेण पश्चामपूचेयत् अस्यमासस्य कन्यामासौति, नाम वर्तते। कन्या आदिशक्तेः स्वरूपमेव। आदिकन्या जगज्ननी' इति वदन्ति अपि जीवेम 'शरदश्शतम्, नन्दामशरदश्शतम्' इति सुणुमः किम्। अत संवत्सरम् इति वक्तुं शरत् इति वदन्ति। शरत्कालस्य प्राधान्यमेवं वर्तते।

शरत्कालात् पूर्वं भूमौ सर्वत्र पङ्कं पश्यामः, आकाशोऽपि मेघावृतः भवति। शरत्काले पङ्कणितं स्वष्ठं जलं निर्मलमाकाशं पश्यामः। एवमेव अस्माकं मनः अपि शरदिव स्वस्कं, निर्मलं भवेत्। कालः इत्युक्ते स्थितिः। एन शरत् स्थितिं प्राप्नुयात्। तादृशमेव मनः आराधनेन आनन्द इन्द्रियदृढत्वं च लभते। रजोगुण, तमोगुणरहितं केवल शुद्धसत्वगुण सम्पन्नं स्यान्मनः।



देवी यथा शारदाराध्या तथेव शतृसंहारमूर्तोति कथ्यते। अज्ञानादि असुरत्वमनया नश्यति। शयकाल विजयप्रतीकः। रामः सीतान्वेषणमस्य मासे एव आरब्धवान्। अस्यैव विजयमासः इति नामान्तरम्। रामायणे, महाभारते च दुर्गाराधनं दृश्यते। कुरुक्षेत्रयुद्धं पूर्वं श्रीकृष्णः धर्मराजेण, अर्जुनेन च दुर्गाराधनं कारितवान्।

एवं नवरात्रिषु कृते देव्याराधनं आसंवप्सरकालं ददाति। सर्वारिष्टनिकारणं च भवति। एतत्वं कृष्णतत्वं देवीतत्वेन मिलित्वा विराजते।

नवरात्रिषु श्रद्धया देव्याः आराधनं कृत्वा तदनन्तरदिने, दशहरा, दशरा, विजयदशमी इति उत्सवं कुवन्ति। दशविधपापानि दुरतीति दशहरा इति विजयदशमी इत्यपि कथ्यते। दशमिदिने आराध्या देवता - अपराजिता इति नाम्ना व्यवह्रियते। एनां कथमाराधयेत् इत्युक्ते प्रादूषत् सन्ध्यमतिक्रयस्य किञ्चदपुरचन्त विजयी नाम कालोऽयं सर्वकामार्थसाधकः।

एतस्मन् सन्ध्याकाले पूजा करणीया। ततः शमीपूजा करणीया। शमी अन्तिगर्भा इति कथ्यते। अपि च एवं वदन्ति -

अमङ्गलानां शमनी शमनी दृष्कृतस्य च।
दुःखदनाशिनी धन्या प्रपद्येऽहं शमीं शुभाम्।।

शमीपूजाम् एवं करणीयम् -

यम दृष्करात् अमङ्गलनिरसनार्थं यात्रायाः विजयार्थं च शमीपूजां करिष्ये इति संकलप्य पूजां कृत्वा ततः वृक्षमूलात् मृत्तिकामानीय गृहे संस्थाप्य पूजां कृत्वा पुण्यस्त्रीभिः नीजजनं दातव्यम्।

**शमी शमयते पापं शमी शतृविनाशिनी**
**अर्जुनस्य धनुर्धारी यमस्य प्रियदर्शिनी।**

इति उक्त्वा नमस्कारः करणीयं देव्याः नैकनामानि सन्ति परन्तु देव्याः नैकनामानि यन्ति परन्तु माता, अम्बा इति नामौ इष्टौ साम्राज्यदायीनि राजराजेश्वरीदेवी राज्यवल्लभा इति नामान्यपि प्राधान्येन लभन्ते। यह देवीमेनां साम्रज्यदायिनी आरध्यते। यह राजा भविष्यति नाम राज्यसम्पादमानोति। तथैव स्वाप्मानन्दलभीयूतब्रह्माद्यान्दसन्तति इति नाम्ना सन्तुष्टया तथा ज्ञना सम्पददमपि प्राप्तं शक्यते। यः तस्याः अतुग्रहं प्राप्नोति सः सर्वतन्त्रस्वतन्तः विराजते।

एकदा अलेग्जाण्डर् भारतदेशं प्रप्यागतवान्। तदा एकः योगी तं दृष्ट्वापि नमस्कारमपि न कृतवान्। तदा राजा तथाकरणाय किं कारणमिति पृष्टवान् तदा योगी तव राज्यं सम्पत् परहस्तं गच्छति मम ज्ञानप्राप्तं कोऽपि न तथति इति समाधानं दत्तवान्। श्लोक याश्वतं ज्ञानसम्पत प्राप्तवयम् इति ज्ञातव्यम्।

विजयवासिकव्यां माधवर्या इति राजा पुत्रस्यविषयेऽपि धर्ममाचरितवानिति दुर्गा सन्तुष्यकनकवृष्टिं वर्षिता। अनेन ज्ञायते यत् धर्माचरणेन देवी सन्तुष्टा भवति इति तदारया सा देवी कनकदुर्गा इति नाम्ना प्रसिदि्धं गता।

कनकं नाम केवलं सुवर्णमिति न, अपि च प्रकाशमित्यर्थः। चैतन्य स्वरूपिणी चैतन्यमेव कनकम्।

श्रीमद्रामायण, महाभारतयोः विजयदशम्याः सम्बन्धः अस्ति। रमोऽपि दुर्गापूजं करोति। राजां अपराजितां एवं पूजयते अपराजितायै नमः, क्रियार्चद्धर्यै नमः जयायै नमः विजयायै नमः। इमां पूजां मया देवी ययाशक्तिनिवेदिता। रक्षार्थं तु समाधाय व्रज स्वस्यानमुत्तमम्।।

**अपराजिता भद्ररथा कथेतु विजयं मम।**
**हारेण वा विचित्रेण भास्वत् कनकमेश्वला।।**

एवं सर्वदा अपराजितां स्मराध्येत् विजयं प्राप्नुमः। राजा देश क्षेमार्थं देव्याः पूजां कृतवान्। ततः देव्याः मन्दिरामपि निर्मितवान्।

लोकपालकाः एकैकस्मिन् दिने एकैकं अलङ्कारं भवति।

**अलङ्काराः**

१. **स्वर्णकवचालङ्कारः** - नवरात्रिषु देवी स्वर्णकवचेन विराजते। अत्र सक्लशतृपीडानिवारिणीति प्रया अस्ति देव्याः नवंविजयप्रदायिनी एषा सर्वेषां दृष्टिमार्कति।

२. **बालात्रिपुरसुन्दरी** - त्रिपुरात्रय बालात्रिपुरसुन्दरी प्रथमाराध्या। मनोबुद्धयहङ्कारत्रयं देव्याः अस्याः आधीने वर्तन्ते। षोडशीविद्यायाः अधिदेवता नित्यसन्तोषिणी प्रजायै वरदायिनी।

३. **गायत्रीदेवी** - सकलमन्त्राणां मूलरूपिणी पञ्चमुखी, अस्याः आरधनेन मन्त्रशक्तिं ब्रह्मज्ञानं च प्राप्तुं शक्यते।

४. **अन्नपूर्णादेवी** - सर्वप्राणीनां प्राणाधारं अन्नमेव। अन्नपूर्णादेवी पार्णो दर्वी धृत्वा अन्नं परिवेषयति। अस्याः आराधनेन पुत्रपौत्राभिवृद्धिं प्राप्तिः भवति।

५. **ललितात्रिपुरसुन्दरी** - मणिद्वीपनिवासिनी श्रीविधास्करूपिणा, चिदग्विकुण्डसम्भूता,कोटिसूर्यसमप्रभा, सर्वेश्वर्यप्रदायिनी सर्वदरिदृशमनी सती भक्तान् अनुगृहन्ति रक्षति च।

६. **महालक्ष्मीः** - सर्वेषामपि जनानां धनमत्यावश्यकं भवति। उभयपार्श्वयोः हस्तिथिः सेविता, लौकिक - पारलौकिकसौख्यदायिनी सती शीघ्रकलदायिनी भासते।

७. **महासरस्वती** - सरस्वत्याः अलङ्कारस्य महत् प्राधान्यं वर्तते। वाचः बुद्धेः विज्ञानस्य कलानां च एषैव अधिष्टात्री। वीणापुस्तकाक्षमालाभिः विराजिता विशेषतः छात्राणां कृते इष्टदायिनी। अस्याः ओराधनेन लौकिकविधाभिस्सह मोक्षप्राप्तिरपि प्राप्नुवन्ति जनाः।

८. **महिषासुरमर्दिनी** - तेजोमयी, नैकायुधाय, महिषासुरसंहारं नवमितियौ अभवत्। अत एव महर्नवमीति कथ्यते। अस्मिन् दिने चण्डीम् अराधयन्ति। अनेन शतृपीडा नाश्यति।

९.**श्रीराजराजेश्वरी** - अपराजिता राजराजेश्वर्याः सकललोकैः आराध्यते। अस्य अनुग्रहेण इच्छा, ज्ञानशक्तिः प्राप्तुं शक्यम्।

एवं नवालङ्कारैः नाम बहुरूपैः विराजमाना देवी एकैवशक्तिः। नैकैः रूपैः अस्माननुगृह्णन्ति। ब्रह्मविष्णुशिवात्मिका सा कुबेरस्यादि ऐश्वर्यं ददाति। सर्वशासकैपा नारायिणी सर्वव्यापिनी दृश्यते।'' इत्यत्र प्रथम - अं, बहिः - ब मिलित्वा अंब इति कथ्यते।

**''या देवी सर्वभूतेषु मातृरूपेण संस्थिता नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।''**



## तिरुमलतिरुपतिदेवस्थानानि

**२०२२ आगस्ट् ०७ तः १० तारीखा पर्यन्तं आयोजित श्री श्रीनिवास स्वामिनः पवित्रोत्सव दृष्यानि। अस्मिन् उत्सवे श्री श्री श्री पेद्धजीयर् (महाजीयर्) स्वामिनः श्री श्री श्री चिन्नजीयर् (अल्पजीयर्) स्वामिनः ति.ति.दे. कार्यनिर्वहणाधिकारि श्री वि.धर्मा रेड्डि ऐ.डि.इ.यस्. दम्पत्यौ भागं गृहीतवन्तः**









# श्री कनकदुर्गा अलङ्काराः

आश्वयुज शुद्ध प्रतिपत् तः दशमि पर्यन्तं वैभवोपेतन दशरा शरन्नवरात्रि महोत्सवाः प्रचलन्ति। अधिष्ठनदेवतां प्रतिदिनं प्रत्येक अवतारेण नवदिनानि नव अलङ्काराः कृत्वा दशमदिवसे विजयदशमी कुर्वन्ति। अस्मिन् सन्दर्भे अम्बायाः अलङ्काराः सप्तगिरि पाठकानां कृते .....



## स्वर्णकवचालङ्कृत दुर्गादेवी

नवरात्रि उत्सवेषु प्रथम दिने दुर्गादेवीं स्वर्णकवचेन अलङ्कुर्वन्ति। अष्टभुजैः नक्षत्राधिक कान्ति युक्त मुक्ता फलं धृत्वा, सुवर्णद्वाया युत वदनेन अम्बा दर्शनं ददति। सिंहवाहनम् अधिरुहय शङ्क, चक्र, गदा, शूल, पाश, महासङ्ग, परिघ इत्यादि आयुधानि धृत्वा तिष्ठति। सकल शत्रु बाधान् निवारयति। इयम् अम्बाम् आयधनं करोति चेत् सकल विजान् लभन्ते।

पूजा द्रव्याः - हरिद्रा अक्षताः हरिद्रा पुष्पाणि , निवेदना - चित्रान्नम्



## बालात्रिपुरसुन्दरीदेवी

त्रिपुरात्रये बालात्रिपुर सुन्दरी प्रथमदेवता। मनः, बुद्धिः, अहङ्कारः च एतस्याः मातायाः आधीने भवन्ति। एषा अभय हस्तं, वरदमुद्रां प्रदर्शयित्वा अक्षमाला धृत्वा भवति। एतया आराधनेन नित्यसन्तोषं जनयति। श्रीचक्र सम्प्रदाये शोडषविद्यायाः अधिदेवता एषा। अस्याः अनुग्रहेण उत्तम सन्तानप्राप्तिः भवति। पूजा विधिः - कुमारी पूजा करणीयम्

निवेदना - क्षीरान्नम्



## गायत्रीदेवी

वेदमाता गायत्री। सर्वेषु मन्त्रेषु मूलशक्तिः। पञ्च मूखैः शङ्क, चक्र, गदा अङ्कुशान् धरति। गायत्री उपासनेन बुद्धिः विकसति। अस्याः उपासनेन अनन्त मन्त्र शक्ति सिद्धिः भवति। सकलदुरितउपद्रवाः अपसरन्ति। ब्रह्मज्ञानमपि सिध्यति। गायत्री मन्त्र पारायणं वेदपारायण फलितं ददाति। पूजाविधिः - वेदपण्डितान् अर्चयेयुः।

निवेदना - अद्रक अपूपाः।



## अन्नपूर्णादेवी

एकस्मिन् हस्ते मधुररसैः युक्त (धृत) माणिक्य पात्रम्, अपरे हस्ते जनान् अनुग्रहार्थं धृत दर्वीं विरामाना अन्नपूर्णा देवी अम्बा अस्माकं दर्शनं ददाति। अस्मिन् अवतारे अम्बा रक्तवर्ण शरीरेण, ग्रीवे ताराहारान् धृत्वा पौर्णिमायाः चन्द्रः इव सुन्दर वदनेन विशाल त्रिनेत्रैः विराजते। इयं मातरं ये उपासनं कुर्वन्ति ते पुत्रपौत्राभिवृद्धिं, ब्रह्म तेजः अपि प्राप्नुवन्ति।

पूजाद्रव्याणि - बाल रक्क वर्ण अथवा श्वेत पुष्पाणि निवेदना - दद्योधनम् मरीच्यन्नम्।



## ललिता त्रिपुर सुन्दरी देवी

त्रिपुरात्रये इयं द्वितीया देवी। मणिद्वीपवासिनी, श्रीविद्या स्वरूपिणी। उपासकानां मुरव्य आराध्य देवता। चैतन्यम् इति अग्निकुण्डात् एषा आविर्भवति। अस्मिन् अलङ्कारे दुर्गामाता कोटिसूर्य प्रकाशेन विराजते। हस्ते पाशः अङ्कुशः, धनुः पुष्पबाणानि धृत्वा दर्शनं ददाति। अस्याः उभय पार्श्वे लक्ष्मीसरस्वत्यौ विञ्जामरैः वीजयित्वा सेवां कुरुतः। अस्याः मातुः उपासन द्वारा सकल ऐश्वर्य प्राप्तिः भवति। पूजा द्रव्याणि - कुङ्कुमा

निवेदनम् - क्षीरान्नम्।

# श्री कनकदुर्गा अलङ्काराः





## महालक्ष्मीदेवी

उभयतः गजराजानौ सेव्यमानौ, उभय हस्ताभ्यां कमलानि धृत्वा, अभयमुद्रैः श्री महालक्ष्मी भक्तानां दर्शनं ददाति। त्रिपुरात्रये महालक्ष्मी मध्यमा। अस्याः उपासनेन लौकिक सम्पदा अलौकिक मोक्षसम्पदापि अस्माकं लभन्ते। एषा शीघ्र फलदायिनी।
पूजा द्रव्याणि - रक्तवर्ण पुष्पाणि
निवेदन - मोदकानि।



## महा सरस्वती देवी

मूला नक्षत्रे सरस्वत्याः अलङ्कारः वर्तते। तस्य अतीव प्रामुख्यं भवति। वाक्, बुद्धिः, विज्ञानं, कळाः..... सर्वेषाम् एषा एव अधिष्ठान देवता। कच्चपी नाम वीणा, अक्षमाला, धवळ वस्त्राणि धृत्वा, मयूरम् अधिरुह्य एषा माता दर्शनं ददाति। सरस्वती उपासनेन लौकिक विद्यया अलौकिक मोक्ष विद्या अपि अस्माकम् अवगतं भवति। पूजा द्रव्याणि - धवळ पुष्पानि
निवेदन - दद्योदनम्, शर्कराम्नम्।



## दुर्गादेवी

दुर्गादेवी सकल दुःखान् निवारयति। उग्ररूपेण दुष्टान् संहरति। परमाशान्त मूर्ति रूपेण भक्तानाम् अनुगृह्णन्ति। पञ्चप्रकृति रूपेण प्रथममूर्तिः। रक्तवर्ण शाटिका, मणियुक्त किरीटम्,. अष्ट भुजैः खड्गं, गदा, शङ्कं, चक्रं, कलशः, त्रिशूलं, धनुर्बाणानि धृत्वा दर्शनं ददाति। एषा सिंहवाहनम् अधिरुहति। इमां मातरं यदि ध्यानं कुर्वन्ति चेत् सर्वरोगाः नश्यन्ति। पूजा द्रव्याणि - रक्तवर्ण अक्षताः
निवेदना - चित्रान्नम्, कुशलान्नम्, मधुरान्नम्।



## महिषासुर मर्दिनी देवी

दिव्यतेजसा अनेक आयुधैः सिंहवाहने एषा माता दर्शनं ददाति। महिषासुर संहारं नवमि तिथौ महर्नवमी रूपेण वयम् उत्सवं कुर्मः। अस्मिन् दिने चण्डी आराधनं ये कुर्वन्ति ते शत्रुवाधा विमुक्तयः भवन्ति। सर्वेषु विजयमेव भवति। पूजाविधिः - सुवासिनी पूजां कृत्वा मङ्गळ द्रव्याणि, हरिद्राकुङ्कुमौ, शक्त्यानुसारं नूतनवस्त्राणि दातव्यम्। निवेदना - गुडोदकम्, चित्रान्नम्, मुद्गसूपम्, पायसान्नम् ।



## श्री राजराजेश्वरी देवी

अपराजिता देवी रूपेणापि एषा माता विराजते। सकल भुवन ब्रह्माण्डानाम् आराध्य देवता एषा। स्वप्रकाश ज्योतिस्वरुपेण, परमेश्वरस्य अङ्कम् आसनम् कृत्वा विराजते। निश्चल चित्तेन एतया आराधनं यः करोति तं इच्छा, ज्ञान, क्रिया शक्तीन् ददाति। मायामोहित मानव मनोचैतन्यः इयं मात्रा द्वारा उद्दीपनं भवति। पूजाद्रव्याणि पीतवर्ण पुष्पाणि।
निवेदना - भक्षभोज्य युक्त महानिवेदना, मोदकानि।






स्वतन्त्र भारतावनि ७५ वत्सराः सम्पूर्णमान सन्दर्भे आजादी का अमृत महोत्सवस्य भागे ति.ति.दे. निर्वहमाण स्वातन्त्रय दिनोत्सव(१५.०८.२०२२) दृश्यानि। अस्मिन् कार्यक्रमे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री.ए.वि.धर्मारेड्डि, ऐ.डि.इ.यस्.। ति.ति.दे. संयुक्त कार्यनिर्वहणाधिकारिणौ श्री वीरब्रह्मम् ऐ.ए.एस्.श्रीमति सदाभार्गवी ऐ.ए.यस्. तथैव ति.ति.दे. उन्नताधिकारिणः उद्योगिनश्च भागं गृहीतवन्तः।








# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः


तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८


(तदनन्तरम्)

सुरणतियु मुनिदेळु हगलिरुळुमळेगरेये।
वेरळभि घरिसि तुरुगळ काच्दे।

वरमुनि पसवनु (अगनवनु) वेडलु वेदरि नट -
नरसि निन्न करेये करुणदलि पालिसिदि।।

पूर्वं यदा इन्द्रः एकं सप्ताहं यावत् अहोरात्रं गोकुलस्य उपरि वृष्टिं कारितवान्। तदा गोवर्धनपर्वतं भवतः कनिष्ठिकायाः उपरि संस्थाप्ये गोपान् गाश्च रक्षितवान् खलु। तथैव यदा दुर्वाससो महर्षिः अकाले समागत्य द्रौपदीम् अन्नम् याचितवान् तदा तां भीतां दौपदीं करुणया रक्षितवान् किल।

जलजाक्ष देहवनु पोतु बळलिदाग
सलहोवेकिंद वेसरि सलिल्ला।
सुलभदलि शेषाचलनामप्प
ओलिदेक्षनु संरक्षिसो विजयविट्ठलने।।

हे कृष्ण! भवान् यदा गोवर्धनगिरिं कनिष्ठिकायाः उपरि बहुकालं स्थापितवान् तदा निवेदनासीत् किल! किं मम विषये निर्वेदः अणतः वा? स्वामिन्! शेषाचलवास! विजयविठलराजन्! मां रक्षस्व!

एकमेव पदं अर्थभेदेन पुनः प्रयुज्यते चेत् यमकालङ्कारः भवति। यमकमनुसृत्य भगवतः वेङ्कटेश्वरस्य दर्शनेन प्राप्तपास्वश्यकारणात् 'नीरु' इति शब्दं बहुवारं उच्चारयन् पञ्चचरणात्मकं गीतं रचितवन्तः विजयदासवर्याः। अस्मिन् गीते नैकपुराणनिर्णयग्रन्थेश्चः विविधसन्निवेशान् सहृय 'नीरु' शब्दस्य समन्वयं विजयदासवार्याः इत्थं कृतवन्तः।

नोडिदे गिरिय निर्मलन नित्य-
मूडल दिक्किनल्लिप्प निर्मलना।।

(नगारूढं तिरुमलाधीशं दृष्टवान्। सः प्राचीदिश सम्मुखो भूत्वा निर्मलः वर्तते।

नीडेर कूडादिदवना। देव! नीरोळगे सदनव बिगिदवना।।
नीरद श्याम वर्णन। भव! नीरज भव वन्द्य दयासागरना।।

अस्मिन् चरणे 'नीरु' शब्दः वारचतुष्टयं प्रयुक्तः। नीदेर कूडादिदवन - गोपिकाकान्ताभिः युक्तः इत्यर्थः। नीरोळगे सदनत्र बिगिदवना - समुद्रस्य मध्ये द्वारकानगरस्य निर्माणं कृतवान् इत्यर्थः। नीरदश्याम वर्णन - नीरदः इति शब्दस्य मेघः इत्यर्थः अतः मेघः इव शॅयामवर्णयुक्तः इति अर्थः। नीरजसववन्द्य - कमलो भवेन ब्रह्मणा नमस्कृतः दयासागरः इत्यर्थः।

नीरुपाददनिल पेत्तवना। महा नीरु दारि मक्कळ।।

अस्मिन् चरणेऽपि 'नीरु' शब्द चतुर्वारं प्रयुक्तः। नीरुपाददलिपेत्तवना - द्यादात् जलोदमवं कृतवान् इत्युक्तौ गङ्गायाः जन्मस्थानं तव पादः इत्यर्थः। नीरुदादि मक्कळतोरिदनाहरिवंश - महाभारततात्पर्यनिर्णय ग्रन्थयोः एतस्य वाक्यस्य आधारभूता कथा वर्तते। एकस्य ब्राह्मणस्य चत्वारः पुत्राः सपदि अदृश्याः भवन्ति। तदा तस्य ब्राह्मणस्य दीनावस्थां दृष्ट्वा भगवान् श्रीकृष्णः सप्तसमुद्रान् तीर्त्वा ब्राह्मणेन सह गोलोकं गत्वा चतुरः पुत्रान् आनीय ब्राह्मणाय दत्तवान्। (पूर्ण कथायाः कृते महाभारततात्पर्यनिर्णयग्रन्थं हरिवंश ग्रन्थं च द्रष्टव्यम्)

नीरथि विगिद प्रबलन - समुद्रामुनु विगिंचिम करिधि समुद्रे वारिधेः निर्माणं कारितवान् प्रबलः इत्यर्थः। नीरु पतिय भंगव माडिदवना - जलपते समद्रस्य दर्पनाशनं कृतवान् इत्यर्थः।

(अनुवर्तिष्यते)

भागः -१६

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - आर्.अनन्तकृष्णशर्मा
चरवाणी - ८९७८५८७७५१



(तदनन्तरम्)

**वासांसि जीर्णानि यथा विहाय......**
**अन्यानि संयाति नवानिपेदेही**

पुरातन वस्त्राणि त्क्वा नूतन वस्त्राणि यथा वयं धरामः तथा पुरातन देहान् परित्यिज्य नूतन देहधारणं आत्मनः रुचिः। नूतनवस्त्राणि कियत् पर्यन्तं धरामः इति वक्तुं न शक्ये परं नूतन देहान् कियत् पर्यन्तं धरन्ति जीवाः इत्युक्ते तत्वज्ञान प्राप्तिपर्यन्तम्। तत्वज्ञान प्राप्त्यानन्तरं नूतनदेहमेव न भवति। तत्वज्ञान प्राप्तिपर्यन्तं नूतन देह धारणम् आवश्यक्म्। तदर्थं देह भ्रान्तिः त्सक्तव्यम्। आत्मस्वरूपोपरि एव प्रेम भवितव्यम्। अन्य विषपोपरि भ्रान्तिः त्यक्तव्या इति परमात्मा स्पष्टं वदति।

वासांसि जीर्णानि..... अत्र नूतन देहान् सृजति पुरातन देहान् त्यजति इत्यस्मिन् विषयं यमधर्मराजः अपि उक्तवान् इति इतः पूर्वमेव कटोपनिषद् उपाख्याने दृष्टवन्तः। ''योनिमन्ये प्रपत्यन्ते.... इति मन्त्रस्य अर्थ विवरणं वदन् आगामि जन्मसु विविध शरीराणि मनवाः तेषां तेषां जन्मनां कर्मानुसारं प्राप्नुवन्ति। एनं विषयं परमात्मा पुनरेकवारं अन्यप्रकारेण एवमुपदिशति। शरीराणी (परिणमन्ति) परिणामशीलानि। परन्तु आत्मनः स्वरूपं न परिणमति। देहाः किमर्थं परिणामं प्राप्नुवन्ति। एकस्य देध्स्य एकमेव शरीरं स्यात् किल!। ''एकः एव आत्मा एकमेव शरीरं ' इति नियमः '' किमर्थं न कृतवान् परमात्मा? इति पृष्टे सति एवं न सम्भवति? एवं कर्तुं न शक्यते इति यमधर्मराजः एवं वदति'' यथा कर्म' कर्मकलानुसारं शरीराणि धरन्ति। पुण्यकर्माणि वा? पापकर्माणि वा? यदि पुण्यमेव करोति चेत् देवलोके जन्म लभते। केवलं पापकर्म करोति चेत् तदानीं तिर्यगादि जन्म प्राप्नोति। एतादृशं तिर्यक् जन्म बहुकष्टमिति विदितमेव। पशवः अरण्ये आनन्देन उड्डयनं कुर्वन्तीति वयं न चिन्तयामः। तेषां पक्षिणां सर्वदा प्राणभीतिः भवति, प्रनश्च आहारान्वेषणम्। एवं रीत्या तेषां जीवनं सर्वमपि भयनिवारणाय आहारान्वेषणाय च जीवनं व्ययं भवति। (जीवनं समप्तिं गच्छति)।

(अनुवर्तिष्यते)

तिरुमलतिरुपतिदेवस्थानानि






**प्रदर्शमान**

सप्तगिरेरुपरि भवतां आदराभिमानम् अनन्य समान्यम् ति.ति.दे. पाठकानां मध्ये वारधि इव विराजमान सप्तवर्ण आध्यात्मिक सचित्र मास पत्रिका

## सप्तगिरि पत्रिकायाः मूल्ये परिवर्तनम्।

भवतां गृहं प्रति एव श्रीनिवासस्य आगमनानुभूतिः

सप्तगिरि आध्यात्मिक सचित्र मासपत्रिकायाः कृते शुल्कं दत्वा



श्रीनिवासस्य अक्षरप्रसादं प्रतिमासम् अनुभूयन्तु





# सप्तगिरिः

**आध्यात्मिक सचित्र मास पत्रिका**

(तेलुगु, तमिळं, कन्नडं, हिन्दी, आङ्गलं, संस्कृत भाषाः)

..... शुल्क विशेषाः .....

एक पत्रिका प्रतिः रू/- २०

वार्षिक ग्राहकत्वम् रू/- २४०

आजीविक ग्राहकत्वम् रू/- २४००

(१२ वर्ष पर्यन्तम् एव)

शुल्कस्य परिवर्तनं सेप्टम्बर्, २०२२ तः प्रारम्भः। नूतन ग्राहकानां कृते एव एतद् परिवर्तनं भवति।

सङ्केतः

प्रधान सम्पादकः, ति.ति.दे. प्राङ्गणम् मुद्रणा, के.टि.रोड् - तिरुपतिः - ५१७५०१.

दूरभाषा - ०८७७ - २२६४३६३, २२६४५४३, २२६४३५९

नीतिकथा

# बकस्य प्रतीकारः

कविः - विष्णुशर्मा

एकस्मिन् वने शृगालः बकः च निवसतः स्म। तयोः मित्रता आसीत्। एकदा प्रातः शृगालः बकम् अवदत् - ''मित्र! श्वः त्वं मया सह भोजनं कुरु।'' शृगालस्य निमन्त्रणेन बकः प्रसन्नः अभवत्।

अग्रिमे दिने सः भोजनाय शृगालस्य निवासम् अगच्छत्। कुटिलस्वभावः शृगालः स्थाल्यां बकाय क्षीरोदनम् अयच्छत्। बकम् अवदत् च - ''मित्र! अस्मिन् पात्रं आवाम् अधुना सहैव खादावः।'' भोजनकाले बकस्य चञ्चुः स्थालीतः भोजनग्रहणे समर्था न अभवत्। अतः बकः केवलं क्षीरोदनम् अपश्यत्। शृगालः तु सर्वं क्षीरोदनम् अभक्षयत्।



शृगालेन वञ्चितः बकः अचिन्तयत् - ''यथा अनेन मया सह व्यवहारः कृतः तथा अहम् अपि तेन सह व्यवहरिष्यामि'' एवं चिन्तयित्वा सः शृगालम् अवदत् - ''मित्र! त्वम् अपि श्वः सायं मया सह भोजनं करिष्यसि''। बकस्य निमन्त्रणेन शृगालः प्रसन्नः अभवत्। यदा शृगालः सायं बकस्य निवासं भोजनाय अगच्छत्, तदा बकः सङ्कीर्णमुखे कलशे क्षीरोदनम् अयच्छत्, शृगालं च अवदत् - ''मित्र! आवाम् अस्मिन् पात्रं सहैव भोजनं कुर्वः'' । बकः कलशात् चञ्च्वा क्षीरोदनम् अखादत्। परन्तु शृगालस्य मुखं कलशे न प्राविशत्। अतः बकः सर्वं श्रीरोदनम् अखादत्। शृगालः च केवलम् ईर्ष्यया अपश्यत्।

शृगालः बकं प्रति यादृशं व्यवहारम् अकरोत् बकः शृगालं प्रति तादृशं व्यवहारं कृत्वा प्रतीकारम् अकरोत्।

आत्मदुर्व्यवहारस्य फलं भवति दुःखदम्।
तस्मात् सद्व्यवहर्तव्यं मानवेन सुखैषिणा।।



चित्रकथा

# आगतवान् फल्गुणः


तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्

चित्राणि - तुम्बलि शिवाजी

संस्कृतानुवादः - ए.वि.किरणः

चरवाणी - ९४९०२७९५९४


हे! उत्तर कुमार! कौरवाः अस्माकं षड्सहस्र गवां बन्धनं कृतवन्तः। भवन्तः आगत्य कौरवान् विमोच्य गवां रक्षय।

अस्माकं गवां सुलभतया अहं त्रातुं शक्नोमि। परन्तु मम युद्धतन्त्र निपुणः सारधिः नास्ति। एषः अतीव विचारकः ....

हे युवराज बृहन्नला उत्तम सारथिः। पूर्वं अर्जुनस्य सारथिः आसीत्। सः अर्हः एव .....

सैरन्ध्रि! माम् एतावत् अवमानं कर्तुं बहु क्लेशः अस्ति। मादृशः महावीरस्य बृहन्नलस्य सारथ्यं हास्य विषयः खलु। परन्तु भवती वदन् अस्ति तदर्थं...... अस्तु

भ्रात! भवन्तः कौरव वीरान् जित्वा तेषां विचित्र वस्त्राणि अस्माकं क्रीडानकार्थं स्वीकृत्य आगच्छन्तु।

सोदरी उत्तरा अवश्यम् ......

कौरव सैन्यं दृष्ट्वा उत्तरः भीतिं प्राप्तवान्

बृहन्नल! कौरववीराः कुत्र? अहं कुत्र? प्रतिष्ठा गच्छति चेत् अपि चिन्ता नास्ति। प्राणरक्षणम् अलम्। रथं पृष्टतः कृत्वा मां प्राण रक्षणं कु रु।

युवराजा! भीतिः मास्तु। तैः युद्धं कुरु। राजभवने महिळानां पुरतः कथं भाषणं कृतवान् भवान्? तदर्थं युद्धं करणीयम्।

उत्तरः मह्यं न भवति। माम त्यजतु इति वदन् रयात् बहिः आगत्य धावति। बृहन्नलः उत्तरस्य पृष्टतः धावति। बृहन्नलं दृष्ट्वा कौरवाः एषः अर्जुनः इति अज्ञात्वा हसन्ति।


युवराजा! यदि अहं युद्धं कृत्वा गवां रक्षयामि भवान् रथ सारथ्यं कुरु....


उत्तर! इदं शमी वृक्षस्य उपरि एकः बन्धः अस्ति। तं अधः आनयतु:। तस्मिन् बन्धे अर्जुनस्य गाण्डीवः वर्तते। यदि सः गण्डीवः भवति चेत् एव वयं शत्रून् युद्धे पराजितुं शक्नुमः।
आचार्यः एषः मृत कळेबरः।
युवराजा ते पाण्डवानाम् आयुधाः। अपरान् न दर्शयितुं शवाकृतिं कल्पितवन्तः। तस्मिन् गाण्डीवं स्वीकरोतु...


उत्तरः बन्धं विमोचितवान्। तस्मिन् आयुधाः अतीव विचित्र रुपेण सन्ति। सुवर्ण सर्प इव भाति धनुं दृष्ट्वा उत्तरः भीतिं प्राप्तः। अर्जुनः तस्य नामानि पुरतः वृत्तान्तं सर्वं वदति। तेन बृहन्नलः एव अर्जुनः इति अवगतवान्।


दैवदत्तं गाण्डीवं अर्जुनः धृतवान्। उभौ युद्धरङ्गं प्रति प्रयतौ।


सुयोधन! आगतवान् निश्चयेन अर्जुनः एव....।
पितामहा! यदि सः अर्जुनः एव चेत् पाण्डवानां क्रीडा समाप्ता। पुनः द्वादश वर्षाणि वनवासः निश्चयः।
गण्डीविः निजरूपेण अस्माकं पुरतः आगतवान् नाम वयं किञ्चित् विज्ञतया योचनीयम्। मम मतानुसारं अस्मिन् विजयदशमी पर्वदिने एव पाण्डवानां अरण्य अज्ञातवासाः निर्विघ्नेन परिसमाप्ताः। तदर्थमेव आगतवान् फल्गुणः एव। तेन सह विजयः सुलभः नास्ति।


अर्जुनः वीरविहारं कृत्वा कौरवान् पलायनं कारयित्वा गोगणान् रक्षितवान्। विजयदशम्यां इयं कथा ये श्रुण्वन्ति ते शुभान् प्राप्नुवन्ति।
स्वस्तिः




# तिरुमलतिरुपतिदेवस्थानानि



ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासं इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

३

## लघुप्रश्नोत्तरी

१. धर्मराजस्य अपरं नाम किम् ?
२. महाभारतं केन विरचितम्?
३. पीताम्बरः इति कस्य नाम?
४. महाभारते ''कृष्ण'' इति कां कथ्यते।
५. रामायणे भरतस्य पत्नी का?
६. सुग्रीवस्य पुत्रः कः?
७. कुशलवयोः पितामहः कः?
८. कुशलवयोः मातामहः कः?
९. महाभारत युद्धः कति दिनानि अभवत्?
१०. कुचेलस्य निज नाम किम्?
११. अज्ञातवास समये भीमस्य नाम किम्?
१२. अज्ञातवास समय द्रौपद्याः नाम किम्?
१३. विष्णुसहस्रनाम स्तोत्रं कस्मिन् पर्वे भवति?
१४. रावणस्य कनिष्ठ भ्रातः कः?
१५.रामायणे ''कौसल्या सुप्रजा राम'' इति श्लोकं कः अवदत्?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तानां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपत्रिकानां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।

| | | | |
|---|---|---|---|
| Subscription Number | : | Address | : |
| Name | : | | |
| Mother | : | | |
| Father | : | Phone Number | : |



अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?



चित्रलेखनम्



## रसप्रश्नाः

१. बादरायणः इति नाम कस्य अस्ति ?
२. उत्तरा गर्भे कः जातः ?
३. कौरवाणां अनुजा का ?
४. पराशर महर्षेः पिता कः ?
५. द्रोणाचार्यः कस्य हस्ते निहतः ?
६. श्रीकृष्णस्य अनुजा का ?

(समाधानानि - १. व्यासस्य २.परीक्षित् ३. दुस्सला ४. शक्तिः ५. दुष्टद्युम्नस्य ६. सुभद्रा)








Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507.
Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

**१९-०८-२०२२ तारीखायां ति.ति.दे. गोसंरक्षण शालायां श्री वेङ्कटेश्वर सप्तगोप्रदक्षिण मन्दिरे अत्यन्त वैभवेन आयोजित गोपूजा महोत्सवाः, श्रीकृष्णजन्माष्टमी उत्सवदृश्यानि। अस्मिन् कार्यक्रमे ति.ति.दे. पालकमण्डली अध्यक्षाः श्री वै.वी.सुब्बरेड्डि, ति.ति.दे. पालकमण्डलि सदस्याः श्री पि.अशोक् कुमार्, श्री मुर्रशेट्टि रामुलु, चैन्नै स्थानिक सलहा मण्डलि अध्यक्षाः श्री शेखर् रेड्डि यस्.वि.गोसंरक्षण पालक सदस्याः श्रीराम्.सुनील् रेड्डि ति.ति.दे. संयुक्त कार्यनिर्वाहणाधिकारिणौ श्री वी.वीरब्रह्मम्, ऐ.ए.एस्. श्रीमति सदा भार्गवी ऐ.ए.एस्. इत्यादयाः भागं गृहीतवन्तः।**












SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 20-09-2022 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

०५-१०-२०२२
सौम्यवासरः
प्रातः - चक्रस्नानम्